ततोऽपरैर्वेगवद्भिः क्षुरैस्तस्य घटोत्कचः ।
अक्षमीषां युगं चैव चिच्छेद युधि ताडयन् ।
अवस्कन्द्य रथात्तूर्णं कैर्मीरिः क्रोधमूर्छितः ।
तस्मिन्मायामयं घोरमस्त्रवर्षं ववर्ष ह ।
घटोत्कचोऽप्याशु रथादवस्कन्द्य स तमेव च ।
मायास्त्रेणैव मायास्त्रं व्यधमत्समरे रिपोः ।
हैडिम्बेनार्द्यमानस्तु युधि सोऽलम्बुसो दृढम् ।
अन्तर्हितो महाराज घटोत्कचमयोधयत् ।
अन्तर्धानगतं दृष्ट्वा तत्र तत्र घटोत्कचः ।
गदया ताडयामास वेगवत्या महाबलः ।
उत्पपात ततो व्योम्नि प्रहारपरिपीडितः ।
अलम्बुसो राक्षसेन्द्रः सहसा पक्षिराडिव ।
घटोत्कचोऽप्यसंभ्रान्तः खड्गपाणिरथोत्पतत् ।
ततो वेगेन महता विवर्षिषुरिवाम्बुदः ।
तमापतन्तं संप्रेक्ष्य कैर्मीरी राक्षसोत्तमः ।
अभिदुद्राव वेगेन सिंहः सिंहमिव स्थितम् ।
दक्षिणेनासिमुद्यम्य वक्षः प्रच्छाद्य वर्मणा ।
अभिदुद्राव वेगेन वेगवन्तं घटोत्कचः ।
तावुभौ वेगसंरब्धावलम्बुसघटोत्कचौ ।
अन्योन्यस्य तथैवोरू समाजघ्नतुरञ्जसा ।
अन्योन्यस्याभिघातेन तयो राक्षससिंहयोः ।
शैलेनाभिहतस्यैव शैलस्याभून्महास्वनः ।
ततोपसृत्य सहसा पुनरापेततुर्भृशम् ।
चरन्तावसिमार्गांस्तान्विविधान्राक्षसोत्तमौ ।
तयोर्गात्रेषु पतितावसी भिन्नौ निपेततुः ।
वेगोत्सृष्टे मघवता वज्रे शैलतटेष्विव ।
ततः सैन्यानि ददृशुस्तद्युद्धमतिदारुणम् ।
युद्धं तयो राक्षसयोरामिषे श्येनयोरिव ।
ततो लोहितरक्ताक्षावुभौ तौ राक्षसोत्तमौ ।
अदृश्येतां तु शार्दूलौ सन्ध्यारक्ताविवाम्बुदौ ।
चक्राते श्येनवच्चैव मण्डलानि सहस्रशः ।
उभौ निस्त्रिंशहस्तौ तौ सपक्षाविव पक्षिणौ ।
ततो भ्राम्य तु तं खड्गं पाण्डोः किर्मीरनन्दनः ।
चिक्षेपास्य शिरो हर्तुं स च तस्य घटोत्कचः ।
तावसी युगपद्दीप्तौ समेत्य विपुलौ भुवि ।
पतितौ तौ तु बाहुभ्यां राक्षसौ समसज्जताम् ।
शीर्षघातांसघातैश्च परस्परमथाहतौ ।
पुनर्विमिश्रितौ वीरौ व्यायुध्येते मुहुर्मुहुः ।

11

After 7. 104. 33, T $G_{2-5}$ ins. :

भीमोऽपि च महाराज वैकर्तनमुपाद्रवत् ।

---

( for बाणैस् ). — ( L. 6 ) $G_3$ शनैः ( for शरैः ). — ( L. 10 ) $G_2$ $M_{2,3,5}$ ताडयत् ( for °यन् ). — ( L. 11 ) $G_1$ $M_{3,4}$ कैर्मिरिः ; $G_{3-5}$ कैर्मिरः ( for कैर्मीरिः ). — ( L. 13 ) $G_1$ $M_{1,2}$ [अ]थ ( for [आ]शु ). $G_4$ सममेव ( for स तमेव ). $G_1$ M ह ( for च ). — ( L. 15 ) $G_1$ $M_{1,2}$ राक्षसो ; $M_{3-5}$ युद्धे सो ( for युधि सो ). $G_1$ $M_{1,2}$ रणे ; $G_5$ [ऽ]द्रवत् ; $M_{3-5}$ बली ( for दृढम् ). — ( L. 17 ) $G_1$ M तं तत्र च ( for तत्र तत्र ). — ( L. 21 ) T $G_{2-4}$ अथोपतत् ( for अथोत्पतत् ). — ( L. 22 ) $G_1$ $M_2$ विवर्षिषुमिवांबुदं ; $M_{3,4}$ विवर्षुरिव चांबुदः ( for the post. half ). — ( L. 23 ) $M_{3,4}$ कैर्मिरिं ( for कैर्मीरी ). $G_2$ कैर्मिरी राक्षसेश्वरः ( for the post. half ). — ( L. 24 ) $M_5$ [उ]त्थितं ( for स्थितम् ). $M_{3,4}$ सिंहः सिंह इवोत्थितं ( for the post. half ). — ( L. 25 ) $G_2$ $M_5$ ( *inf. lin.* ) चर्मणा ( for व° ). — ( L. 26 ) $G_1$ घटोत्कचं. — ( L. 30 ) T $M_{3-5}$ अभ्यहतस्य ( for अभि° ). $G_1$ M आसीन् ( for अभून् ). $G_{3,4}$ महात्मनः ( for °स्वनः ). — $G_4$ om. lines 31–35. — ( L. 31 ) $G_1$ $M_{1,2}$ तरसा ( for सहसा ). $M_{3-5}$ दिवं ( for भृशम् ). — ( L. 32 ) $G_3$ अतिमार्गांस् ( for असिमार्गांस् ). — ( L. 33 ) T $G_{1,2}$ M सन्नौ ( for भिन्नौ ). — ( L. 34 ) $G_1$ -हते इव ; $M_{1,2}$ -हताविव ( for -तटेष्विव ). — ( L. 35 ) $G_1$ $M_{1,2}$ तत्र ( for ततः ). — ( L. 36 ) $G_1$ $M_{1,2}$ युद्धे ( for युद्धं ). — ( L. 37 ) $G_1$ $M_{1,2}$ उभौ ( for ततो ). $G_1$ M -रक्तांगाव् ( for -रक्ताक्षाव् ). — ( L. 38 ) T $G_2$ अथैक्ष( $G_2$ °क्ष्य )तां ; $G_{3-5}$ तथैक्ष्येतां ( for अदृश्येतां ). $G_1$ $M_{1,2}$ तौ व्यूढौ ( for शार्दूलौ ). — ( L. 40 ) $G_2$ पर्वतौ ( for पक्षिणौ ). — ( L. 41 ) $G_5$ भ्रामयित्वा ( for ततो भ्राम्य ). $G_3$ ततो भ्राम्यकृतं खड्गं ( for the prior half ). $G_1$ $M_{1,2}$ तदा ( for पाण्डोः ). T -मर्दनः ; $G_2$ -मर्दनौ ( for -नन्दनः ). — ( L. 44 ) $G_1$ $M_{3,4}$ समसज्जतुः ( for °ताम् ). — ( L. 45 ) $G_1$ $M_{1,2}$ शीर्षघातांसघाताभ्यां ; $G_{2-5}$ शीर्षाघातांसघातैश्च ( for the prior half ). — ( L. 46 ) $G_1$ $M_{1,2}$ व्यायुध्येतां ; $M_{3-5}$ अयुध्येतां ( for व्यायुध्येते ).

11

( L. 2 ) T $G_2$ आसुरेव च ( hypermetric ) ( for °रे

आसुरे तु महासैन्ये तारकं पावकिर्यथा ।
तयोरेवं महद्युद्धमभवद्भीमकर्णयोः ।
तं भीमसेनो महता शरवर्षेण वारयन् ।
विव्याध सारथिं चास्य हयांश्च चतुरः शरैः ।
ध्वजं चास्य पताकां च भल्लैः संनतपर्वभिः ।
रथं च चक्ररक्षौ च भीमश्चिच्छेद मारिष ।
कर्णोऽपि रथिनां श्रेष्ठो भीमसेनेन कम्पितः ।
खड्गचर्मधरो राजन्भीममभ्यद्रवद्बली ।
भीमश्चिच्छेद खड्गं च चर्मणा सह मारिष ।
दृष्ट्वा कर्णं च पार्थेन बाधितं बहुभिः शरैः ।
दुर्योधनो महाराज दुःशलं प्रत्यभाषत ।
कर्णं कृच्छ्रगतं पश्य शीघ्रं यानं प्रयच्छ ह ।
एवमुक्तस्ततो राजा दुःशलः समुपाद्रवत् ।
दुःशलस्य रथं कर्णश्चारुरोह महारथः ।
तौ पार्थः सहसा गत्वा विव्याध दशभिः शरैः ।
पुनश्च कर्णं विद्ध्वापि दुःशलस्य शिरोऽहरत् ।
दुःशलं निहतं दृष्ट्वा भीमसेनेन मारिष ।
तस्यैव धनुरादाय कर्णो विव्याध पाण्डवम् ।
अन्योन्यं समरे वीरौ युयुधाते महाबलौ ।
शत्रुघ्नौ शत्रुमध्ये तु बलवज्रभृताविव ।
भीमो विद्ध्वा हयांश्चैव सारथिं च पुनः पुनः ।
कर्णमभ्यद्रवत्पार्थः प्रहसंश्च महाबलः ।
ततो व्यायच्छमानस्य भीमसेनस्य संयुगे ।
तत्सैन्यं शकलीभूतं न प्राज्ञायत किंचन ।

## 12

After 7. 114. 42, B $D_{c1}$ $D_5$ ins. :

ततश्चटचटाशब्दो गोधावातादभूत्तयोः ।
तलशब्दश्च सुमहान्सिंहनादश्च भैरवः ।
रथनेमिनिनादश्च ज्याशब्दश्चैव दारुणः ।
योधा व्युपारमन्युद्धाद्दिदृक्षन्तः पराक्रमम् ।
कर्णपाण्डवयो राजन्परस्परवधैषिणोः ।
देवर्षिसिद्धगन्धर्वाः साधु साध्वित्यपूजयन् ।
मुमुचुः पुष्पवर्षं च विद्याधरगणास्तथा ।
ततो भीमो महाबाहुः संरम्भी दृढविक्रमः ।
अस्त्रैरस्त्राणि संवार्य शरैर्विव्याध सूतजम् ।
कर्णोऽपि भीमसेनस्य निवार्येषून्महाबलः ।
प्राहिणोन्नव नाराचानाशीविषसमान्रणे ।
तावद्भिरथ तान्भीमो व्योम्नि चिच्छेद पत्रिभिः ।
नाराचान्सूतपुत्रस्य तिष्ठ तिष्ठेति चाब्रवीत् ।
ततो भीमो महाबाहुः शरं क्रुद्धान्तकोपमम् ।
मुमोचाधिरथेर्वीरो यमदण्डमिवापरम् ।
तमापतन्तं चिच्छेद राधेयः प्रहसन्निव ।
त्रिभिः शरैः शरं राजन्पाण्डवस्य प्रतापवान् ।
पुनश्चासृजदुग्राणि शरवर्षाणि पाण्डवः ।

## 13

After 7. 118. 15, $D_{n2}$ $D_{2.3.5.6}$ S ins. :

संजय उवाच ।
एवमुक्तो रणे पार्थो भूरिश्रवसमब्रवीत् ।

तु ). — ( L. 4 ) T [अ]वारयत्. — ( L. 5 ) T $G_2$ विव्याथ ( for °ध ). — ( L. 12 ) T दुःशळं. — ( L. 13 ) T शीघ्रयानं. $G_2$ शीघ्रं तूपरकं जहि ( for the post. half ). — Before line 14, $G_5$ ins. संजय उवाच. — ( L. 14 ) T दुःशळः. — ( L. 15 ) T दुःशळस्य. — ( L. 16 ) T $G_2$ विव्याथ. — ( L. 17 ) $G_2$ च ( for [अ]पि ). T दुःशळस्य. — ( L. 18 ) T दुःशळं. — ( L. 19 ) T $G_2$ विव्याथ. — ( L. 21 ) T $G_2$ बलिवज्र- ( for बल° ). — ( L. 23 ) $G_2$ प्रहसन्वै ( for °संश्च ). T महारथः ( for °बलः ). — $G_{2-5}$ om. lines 24–25. — ( L. 25 ) $T_1$ ( before corr. as above ). 2 शकलीकृत्तं ( for °भूतं ).

12

( L. 4 ) $D_5$ साधु साध्विति वै प्रोचुर् ( for the prior half ). — ( L. 6 ) $D_5$ पूजयन् ( for [अ]पूज° ). — ( L 12 ) $D_5$ तावंति हि नथा भीमो ( for the prior half ). — ( L. 14 ) $D_5$ संरंभी दृढविक्रमः ( for the post. half ). — ( L. 15 ) $B_4$ अधिरथिं ( for °रथेर् ). — ( L. 17 ) $D_5$ शतं ( for शरं ). ]

13

$D_{n2}$ $D_{2.3.5.6}$ om. the ref. $D_5$ om. line 1. $M_{3.4}$ पार्थ ( for संजय ). — ( L. 1 ) $D_2$ हि कौंतेयो ( for रणे पार्थो ). — ( L. 2 ) $D_{n2}$ $D_{2.3.5.6}$ व्यक्तं हि जी( $D_{2.3}$ व्यक्तैतज्जी- ; $D_6$ व्यजेत जी )र्यमाणो( $D_5$ °नो )पि ( for the prior half ). $G_5$ संजयसे ( for रञ्ज° ). $D_{n2}$ $D_{2.3.5.6}$ बुद्धिं जरयते नरः ( for the post. half ). — ( L. 3 ) $G_1$

व्यक्तमेव हि जीर्णः सन्बुद्धिं रञ्जयसे नृप ।
अनर्थकमिदं सर्वं यत्त्वया व्याहृतं प्रभो ।
हृषीकेशेन संबन्धं गर्हसे मां च मूढवत् ।
रणानामसि धर्मज्ञः सर्वशास्त्रार्थपारगः ।
न चाधर्ममहं कुर्यां जानंश्चैव हि मुह्यसे ।
युध्यन्ते क्षत्रियाः शत्रून्स्वैः स्वैः परिवृता नृप ।
भ्रातृभिः पितृभिः पुत्रैस्तथा संबन्धिबान्धवैः ।
वयस्यैरथ मित्रैश्च स्वबाहुबलमाश्रिताः ।
अहं हि सात्यकिं शिष्यं सुखसंबन्धिमेव च ।
मदर्थे युध्यमानं च त्यक्त्वा प्राणान्सुदुस्त्यजान् ।
मम बाहुं रणे राजन्दक्षिणं युद्धदुर्मदम् ।
निकृत्यमानं तं दृष्ट्वा कथं शत्रुवशं गतम् ।
त्वया निकृष्यमाणं च दृष्टवानस्मि निष्क्रियम् ।
न चात्मा रक्षितव्यो हि एको रणगतेन हि ।
यो यस्य युध्यतेऽर्थाय स संरक्ष्यो नराधिप ।
तं रक्ष्यमाणः स नृपो रक्षितव्यो महामृधे ।
यद्यहं सात्यकिं दृष्ट्वा तूष्णीमासिष्य आहवे ।
ततस्तेन वियोगश्च प्राप्यं नरकमेव च ।
रक्षितश्च मया यस्मात्तस्माल्लब्धो मया स च ।
यशश्चैव स्वपक्षेभ्यः फलं मित्रस्य रक्षणात् ।
यच्च मां गर्हसे राजन्नन्येन सह संगतम् ।
कस्तेन संगमं नेच्छेत्तत्र ते बुद्धिविभ्रमः ।
कवचं धुन्वतस्तुभ्यं रथं चारोहतः स्वयम् ।
धनुर्ज्यां कर्षतश्चैव युध्यतः सह शत्रुभिः ।
एवं रथगजाकीर्णे हयपत्तिसमाकुले ।
सिंहनादोद्धतरवे गम्भीरे सैन्यसागरे ।
स्वैश्चापि समुपेतस्य विक्रान्तस्य तथा रणे ।
सत्यकेन कथं योग्यः संग्रामस्ते भविष्यति ।

---

$M_{1.2.5}$ विभो (for प्रभो). — (L. 4) $Dn_2$ $D_{2.3.5.6}$ जानन्नेव ($D_{3.6}$ °न्नपि) हृषीकेशं (for the prior half). $Dn_2$ $D_5$ पांडवं; $D_{3.6}$ केशवं (for मूढवत्). $D_2$ मावमंस्थाश्च केशवं (for the post. half). — (L. 5) $Dn_2$ $D_{2.3.5.6}$ संग्रामाणां हि ($D_2$ च) (for रणानामसि). $M_{3.4}$ धर्मज्ञ. $D_2$ $M_5$ -शस्त्रास्त्र- (for -शास्त्रार्थ-). $M_{3.4}$ -पारग. — (L. 6) $D_6$ धर्मम् (for [अ]ध°). $G_{1.4}$ $M_{1.2.5}$ हि मुह्यसि; $G_5$ $M_{3.4}$ विमुह्यसि (for हि मुह्यसे). T $G_{2.3}$ अजानंश्चैव मुह्यसि (for the post. half). — (L. 7) $Dn_2$ $D_{3.5.6}$ युध्यंति; $G_4$ बुध्यंते (for युध्यन्ते). $D_{3.6}$ सर्वान् (for शत्रून्). $D_2$ युध्यंति रक्षिताः शत्रून् (for the prior half). $D_5$ स्वस्थैः (for स्वैः स्वैः). $Dn_2$ $D_5$ नराः (for नृप). — (L. 9) $Dn_2$ $D_{2.3.5.6}$ ते च ($D_6$ वै) बाहुं स($D_{2.5.6}$ °हुम)माश्रिताः (for the post. half). — (L. 10) $Dn_2$ $D_{2.3.5.6}$ स कथं (for अहं हि). $G_1$ $M_{1.2.5}$ सत्यकं (for सात्यकिं). $D_{3.6}$ सखि- (for सुख-). $D_2$ सखिसंबंधिनं च हि; S सहा($G_1$ $M_{1.2.5}$ °खा)यं बांधवं तथा (for the post. half). — (L. 11) $M_{3.4}$ मदर्थं (for °र्थे). $Dn_2$ $D_{3.5.6}$ अस्मदर्थे ($D_{3.6}$ °र्थं) च युध्यंतं (for the prior half). — $Dn_2$ $D_{2.3.5.6}$ om. lines 13–14. —(L. 13) $G_{3-5}$ निकृत्यमाणं. —(L. 14) $G_1$ यत्त्वा (for त्वया). $G_1$ $M_{1.2.5}$ विकृष्यमाणं (for निकृष्य°). — (L. 15) T $G_{2-5}$ $M_5$ च त्वं; $G_1$ M ($M_5$ *sup. lin.*) त्वया (for चात्मा). $Dn_2$ $D_{2.3.5.6}$ वै (for हि). $Dn_2$ $D_{3.5.6}$ राजन् (for एको). $D_2$ आपद्गतेन (for रणग°). $G_{2.3.5}$ M वै (for हि). —(L. 16) $Dn_2$ $D_5$ युज्यते (for युध्यते). $Dn_2$ $D_5$ [ऽ]र्थेषु; $D_{3.6}$ [ऽ]र्थे तु (for ऽर्थाय). $D_2$ आपत्सु ये च युध्यंते (for the prior half). $Dn_2$ $D_5$ स वै रक्ष्यो; $D_2$ ते वै रक्ष्या; $D_{3.6}$ स वै नान्यो (for स संरक्ष्यो). — (L. 17) $Dn_2$ $D_{2.3.5.6}$ रक्ष्यमाणैः; T $G_{3.4}$ द्रक्ष्यमाणः (for रक्ष्य°). $D_3$ स नृपो; $D_6$ स नृपा (for स नृपो). $D_6$ रक्षितव्या (for रक्षितव्यो). — (L. 18) $G_1$ M सत्यकं (for सात्यकिं). $Dn_2$ $D_{2.3.5.6}$ पश्ये (for दृष्ट्वा). $Dn_2$ $D_{2.3.5.6}$ वध्यमानं महारणे (for the post. half). — (L. 19) $Dn_2$ $D_5$ तस्य (for तेन). $Dn_2$ $D_{2.3.5.6}$ वियोगेन (for °गश्च). $G_{3-5}$ प्राप्तं (for प्राप्यं). $Dn_2$ $D_5$ पापं मेनर्थतो भवेत्; $D_2$ पापं ननु कथं मम; $D_{3.6}$ पापं न कथमेव मे (for the post. half). — (L. 20) $G_3$ सखा (for स च). $Dn_2$ $D_{3.5.6}$ तस्मात्क्रुध्यसि किं मयि (for the post. half). — $Dn_2$ $D_{2.3.5.6}$ om. line 21. — (L. 22) $Dn_2$ $D_5$ $M_{1.2.5}$ मे; $D_6$ $M_{3.4}$ मा (for मां). $D_5$ अल्पेन; T $G_{2-5}$ कृष्णेन; $G_1$ M विष्णुना (for अन्येन). $D_{2.3.6}$ संगतः. —(L. 23) $G_1$ M संगतं; $G_4$ संयुगं (for संगमं). $Dn_2$ $D_{2.3.5.6}$ अहं त्वया विनिकृ- ($Dn_2$ $D_6$ °हृ)तम् (for the prior half). $Dn_2$ $D_{2.3.5.6}$ मे (for ते). — (L. 24) $D_2$ कवची त्वं धनुष्मांश्च (for the prior half). $D_2$ रथे (for रथं). $D_2$ मया (for स्वयम्). — For lines 24–25, S subst.:

आबद्धकवचस्येह रथमारुह्य तिष्ठतः ।
सर्वायुधैरुपेतस्य प्रतियोद्धृप्रतीक्षिणः ।

— (L. 26) S स्व($G_1$ M अ)मित्ररथगजानीके (for the prior half). $G_5$ damaged for the post. half. — (L. 27) $G_5$ *हनादोद्धतावेगं (for the prior half). — (L.

बहुभिः सह संगम्य निर्जित्य च महारथान् ।
श्रान्तश्च श्रान्तवाहश्च क्षीणसर्वायुधस्त्वया ।
ईदृशं सात्यकिं संख्ये निर्जित्य च महारथम् ।
अधिकं त्वं विजानीषे तथाप्यन्यमना भवान् ।
यदिच्छसि शिरश्चास्य असिना हर्तुमाहवे ।
तथा कृच्छ्रगतं दृष्ट्वा सात्यकिं कः क्षमिष्यति ।
त्वं तु गर्हय चात्मानमात्मानं यो न रक्षसि ।
कथं करिष्यसे वीर यो वा त्वां संश्रयेज्जनः ।
आत्तशस्त्रस्य हि रणे वृष्णीपुत्रं जिघांसतः ।
छिन्नवान्यदहं बाहुं नैतल्लोकविगर्हितम् ।
न्यस्तशस्त्रस्य हि पुनर्विकलस्य विवर्मणः ।
अभिमन्योर्वधं तात धार्मिकः को नु पूजयेत् ।

## 14

After 7. 118. 26, S ins. :

दुर्योधनस्य क्षुद्रस्य न प्रमाणे च तिष्ठतः ।
सौमदत्तेरयं साधु सर्वसाहाय्यकारिणः ।
अस्मदीया मया रक्ष्याः प्राणबाध उपस्थिते ।
ये मे प्रत्यक्षतो वीरा हन्येरन्निति मे मतिः ।
सत्यकश्च वशं नीतः कौरवेण महात्मना ।
ततो मयैतच्चरितं प्रतिज्ञारक्षणं प्रति ।

संजय उवाच ।

पुनश्च कृपयाविष्टो बहु तत्तद्विचिन्तयन् ।
उवाच चैनं कौरव्यमर्जुनः शोकपीडितः ।
धिगस्तु क्षत्रधर्मं तु यत्र त्वं पुरुषेश्वरः ।
अवस्थामीदृशीं प्राप्तः शरण्यः शरणप्रदः ।
नातिभारः कृतान्तस्य विद्यते कुरुनन्दन ।
यत्र त्वं पुरुषव्याघ्रः प्राप्तः पापामिमां दशाम् ।
नात्मनः सुकृतस्यास्य फलं वै नृपसत्तम ।
यत्र त्वं कुरुशार्दूल प्राप्तः पापामिमां दशाम् ।
रौरवं नरकं भीमं गमिष्यति सुयोधनः ।
यत्कृते नरशार्दूलः प्राप्तः पापामिमां दशाम् ।

28 ) G4. 5 M4 विश्रमस्य ( for विक्रान्तस्य ). Dn2 D2. 3. 5. 6 स्वैः परैश्च समेतेभ्यः ( D2 °मभ्येत्य ) सात्वतेन च संगमे ( Dn2 °ते ). — ( L. 29 ) T G3. 4 सात्यकेन ; G2 M4 सात्वतेन ( for सत्यकेन ). Dn2 D5 एकस्यैकेन हि कथं ; D2 एकैकस्य न हि कथं ; D3. 6 एकैकस्य हि कथं ( for the prior half ). Dn2 D2. 3. 6 सं- ; D5 स ( for ते ). — Line 30 is partly damaged in G5. — ( L. 31 ) D3. 6 आगतः ( for श्रान्तश्च ). G5 क्षीणाः ; M1–3 क्षीणः ( for क्षीण- ). Dn2 D2. 3. 5. 6 विमनाः शस्त्रपीडितः ( for the post. half ). — ( L. 32 ) S समेतः ( for ईदृशं ). T G2–5 M3. 4 सात्यकिः ; G1 M1. 2 सत्यकं ; M5 सत्यकः ( for सात्यकिं ). G1. 3–5 M1. 2 संखे ; M3. 4 संघे ( for संख्ये ). S निर्जितश्च महारथः ( for the post. half ). — ( L. 33 ) T G2–4 त्वां ; G1 M त्वा ( for त्वं ). G1. 3 M1. 2. 5 विजानामि ; G4 न जानामि ; M3. 4 [अ]नुजानामि ( for विजानीषे ). D2 अविनीतः शिरच्छेत्तुं ; D3. 6 विरथं शस्त्रहीनं तं ; G5 अधिकं चापि जानामि ( for the prior half ). M1. 2. 5 [अ]भवं ( for भवान् ). Dn2 D3. 5. 6 स्ववीर्यवशमागतं ( Dn2 °ते ); D2 प्रवृत्तो वशमागतं ( for the post. half ). — ( L. 34 ) D2 यदा वक्षसि शिष्यस्य ( sic ); S इच्छसि त्वं शिरस्तस्य ( for the prior half ). Dn2 D5 हंतुम् ; D2 हर्तुर् ( for हर्तुम् ). — ( L. 35 ) Dn2 D2. 5. 6 चैव ( for दृष्ट्वा ). D3 तथाप्यापद्गतं चैव ( for the prior half ). G1 M1. 2. 5 सत्यकं ( for सात्यकिं ). — ( L. 36 ) G5 वा ( for च ). Dn2 D3. 5. 6 त्वं वै ( D3. 6 मां ) विगर्हयात्मानम् ; D2 त्वं तु वै गर्हयात्मानम् ( for the prior half ). G3. 4 स्वधर्मं ( for आत्मानं ). D3. 6 रक्षति ( for °सि ). D5 यो न रक्षसि संयुगे ( for the post. half ). — ( L. 37 ) T G2. 3 M3. 4 रक्षिष्यसे ( T1 °ते ); G1 M1. 2 संरक्ष्यते ; M5 न रक्ष्यते ( for करिष्यसे ). D3 यत्त्वं ( sic ) ( for वीर ). D2 ये वा त्वा शिश्रियुर्जनाः ; D3. 6 ये वा त्वां संश्रया जनाः ; T G2–5 ये वै त्वां संश्रिता जनाः ; G1 M यो वै त्वां ( M5 त्वा ) संश्रितो जनः ( for the post. half ). — Dn2 D2. 3. 5. 6 om. lines 38–41. — ( L. 38 ) G1 M वृष्णीवीरं ( for °पुत्रं ). — ( L. 39 ) G1 M लोके ( for लोक- ). — ( L. 40 ) T G2 च ( for हि ). T G2–4 विरथस्य ( for विकलस्य ).

14

G3. 4 om. lines 1–4. — ( L. 1 ) T G2. 5 अप्रमाणे ( for न प्र° ). M4 [ऽ]व- ( for च ). — ( L. 2 ) G1 M1. 2. 4. 5 कथं ( for अयं ). T G5 साधुः ( for साधु ). G1 M5 सर्वे ( for सर्व- ). M1. 2 सर्वे साहाय्यकारणाः ; M3. 4 सर्वे ते साह्यकारिणः ( for the post. half ). — ( L. 5 ) G2 सात्यकिश् ; G3–5 सात्यकश् ( for सत्य° ). T G2. 4 M3. 4 वधं ( for वशं ). T G2. 3 om. the ref. — ( L. 8 ) G1 प्रोवाच ( for उवाच ). — Before line 9, M3. 4 ins. अर्जुनः. — ( L. 9 ) M3. 4 हि ( for तु ). M3. 4 यस्त्वं हि ( for यत्र त्वं ). T G2 M3. 4

को हि नाम पुमाँल्लोके मादृशः पुरुषोत्तम ।
प्रहरेत्त्वद्विधे त्वद्य प्रतिज्ञा यदि नो भवेत् ।

## 15

After 1004*, B Dc1 Dn1 D3 ins.:

ततः क्रुद्धो महाबाहुरैन्द्रमस्त्रं दुरासदम् ।
प्रादुश्चक्रे महाराज त्रासयन्सर्वभारतान् ।
ततः शराः प्रादुरासन्दिव्यास्त्रप्रतिमन्त्रिताः
प्रदीप्ताश्च शिखिमुखाः शतशोऽथ सहस्रशः ।
आकर्णपूर्णानमुक्तैरन्यैकाशु [illegible]नैः शरैः ।
नभोऽभवत्तद्दुष्प्रेक्ष्यमुल्काभिरिव संवृतम् ।
ततः शस्त्रान्धकारं तत्कौरवैः समुदीरितम् ।
अशक्यं मनसाप्यन्यैः पाण्डवः संभ्रमन्निव ।
नाशयामास विक्रम्य शरैर्दिव्यास्त्रमन्त्रितैः ।
नैशं तमोंऽशुभिः क्षिप्रं दिनादाविव भास्करः ।
ततस्तु तावकं सैन्यं दीप्तैः शरगभस्तिभिः ।
आक्षिपत्पल्वलाम्बूनि निदाघार्क इव प्रभुः ।
ततो दिव्यास्त्रविदुषा प्रहिताः सायकांशवः ।
समाप्लवन्द्विषत्सैन्यं लोकं भानोरिवांशवः ।
तथापरे समुत्सृष्टा विशिखास्तिग्मतेजसः ।
हृदयान्याशु वीराणां विविशुः प्रियबन्धुवत् ।
य एनमीयुः समरे त्वद्योधाः शूरमानिनः ।
शलभा इव ते दीप्ता अग्निं प्राप्य ययुः क्षयम् ।
एवं स मृद्गञ्शत्रूणां जीवितानि यशांसि च ।
पार्थश्चचार संग्रामे मृत्युर्विग्रहवानिव ।
सकिरीटानि वस्त्राणि साङ्गदान्विपुलान्भुजान् ।
सकुण्डलयुगान्कर्णान्केषांचिदहरच्छरैः ।
सतोमरान्गजस्थानां सप्रासान्हयसादिनाम् ।
सचर्मणः पदातीनां रथिनां च सधन्वनः ।
सप्रतोदान्नियन्तॄणां बाहूंश्चिच्छेद पाण्डवः ।
प्रदीप्तोग्रशरार्चिष्मान्बभौ तत्र धनंजयः ।
सविस्फुलिङ्गाग्रशिखो ज्वलन्निव हुताशनः ।
तं देवराजप्रतिमं सर्वशस्त्रभृतां वरम् ।
युगपद्दिक्षु सर्वासु रथस्थं पुरुषर्षभम् ।
दर्शयन्तं महास्त्राणि प्रेक्षणीयं धनंजयम् ।
नृत्यन्तं रथमार्गेषु धनुर्ज्यातलनादिनम् ।
निरीक्षितुं न शेकुस्ते यत्नवन्तोऽपि पार्थिवाः ।
मध्यंदिनगतं सूर्यं प्रतपन्तमिवाम्बरे ।
दीप्तोग्रसंभृतशरः किरीटी विरराज ह ।
वर्षास्विवोदीर्णजलः सेन्द्रधन्वाम्बुदो महान् ।
महास्त्रसंप्लवे तस्मिञ्जिष्णुना संप्रवर्तिते ।
सुदुस्तरे महाघोरे ममज्जुर्योधपुंगवाः ।
उत्कृत्तवदनदेहैः शरीरैः कृत्तबाहुभिः ।
भुजैश्च पाणिनिर्मुक्तैः पाणिभिर्व्यङ्गुलीकृतैः ।
कृत्ताग्रहस्तैः करिभिः कृत्तदन्तैर्मदोत्कटैः ।
हयैश्छिन्नखुरग्रीवैः रथैश्च शकलीकृतैः ।

पुरुषेश्वर. — (L. 10) M5 शरणप्रद (for °प्रदः). — (L. 12) G1 M पुरुषव्याघ्र. — G1 M1. 2 om. (hapl.) lines 13–14. — (L. 13) M3. 4 न नूनं (for नात्मनः). — (L. 16) G1 M नरशार्दूल. — (L. 17) G1 M1. 2 पुरुषोत्तमः.

15

(L. 1) Dc1 Dn1 पार्थो (for क्रुद्धो). — (L. 4) B4 प्रदीप्ताग्राः (for °प्ताश्च). — (L. 8) B5 असह्यं (for अशक्यं). — (L. 12) D3 निदाघेर्कं (for निदाघार्क). — (L. 14) Dc1 समाप्लुवन्; D3 °वृण्वन् (for °प्लुवन्). — (L. 15) B4 Dn1 अथ (for तथा). — (L. 18) B5 सलभा (for श°). Bom. ed. दीप्तम् (for दीप्ता). — (L. 19) B4 शूराणां (for शत्रूणां). — (L. 22) D3 -युतान् (for -युगान्). D3 अहनत् (for °रत्). — (L. 24) B1. 5 Dn1 सवर्मणः (for सच°). B1 सवर्मणः; B5 Dn1 सधन्विनः (for सधन्वनः). D3 रथिनां सशरं धनुः (for the post. half). — (L. 28) B5 शर- (for सर्व-). — (L. 30) Bom. ed. निक्षिपंतं (for दर्शयन्तं). — (L. 31) Dc1 D3 -नादितं (for °नम्). — (L. 32) Dn1 निरक्षितुं (for निरी°). B2 पांडवं (for पार्थिवाः). — After line 32, B2 ins.:

न शेकुः सर्वसैन्यानि पाण्डवं प्रतिवीक्षितुम् ।
प्रसृतांस्तस्य गाण्डीवाच्छरव्रातान्महात्मनः ।
संग्रामे समपश्याम हंसपङ्क्तीरिवाम्बरे ।
विनिवार्य स वीराणामस्त्रेणास्त्राणि सर्वशः ।

— (L. 34) Dc1 Dn1 -संहित-; D3 -संहृत- (for -संभृत-). — (L. 37) Dn1 युधि (for योध-). — (L. 38) B5 गत- (for कृत्त-). — (L. 41) B4. 5 D3 च विधुर- (for

निकृत्तान्त्रैः कृत्तपादैस्तथान्यैः कृत्तसंधिभिः ।
निश्चेष्टैर्विस्फुरद्भिश्च कूजद्भिश्च सहस्रशः ।
मृत्योराघातललितं तत्पार्थायोधनं महत् ।
अपश्याम महीपाल भीरूणां भयवर्धनम् ।
आक्रीडमिव रुद्रस्य पुराभ्यर्दयतः पशून् ।
गजानां क्षुरनिर्मुक्तैः करैः सभुजगेव भूः ।
क्वचिद्बभौ स्रग्विणीव वक्त्रपद्मैः समाचिता ।
विचित्रोष्णीषमुकुटैः केयूराङ्गदकुण्डलैः ।
स्वर्णचित्रतनुत्रैश्च भाण्डैश्च गजवाजिनाम् ।
किरीटशतसंकीर्णा तत्र तत्र समाचिता ।
विरराज भृशं चित्रा मही नववधूरिव ।
मज्जामेदःकर्दमिनीं शोणितौघतरङ्गिणीम् ।
मर्मास्थिभिरगाधां च केशशैवलशाद्वलाम् ।
शिरोबाहूपलतटां रुग्णक्रोडास्थिसंकटाम् ।
चित्रध्वजपताकाढ्यां छत्रचापोर्मिमालिनीम् ।
विगतासुमहाकायां गजदेहाभिसंकुलाम् ।
रथोडुपशताकीर्णां हयसंघाततरोधसम् ।
रथचक्रयुगेषाक्षकूबरैरतिदुर्गमाम् ।
प्रासासिशक्तिपरशुविशिखाहिदुरासदाम् ।
बलकङ्कमहानक्रां गोमायुमकरोत्कटाम् ।
गृध्रोदग्रमहाग्राहां शिवाविरुतभैरवाम् ।
नृत्यत्प्रेतपिशाचाद्यैर्भूतैः कीर्णां सहस्रशः ।
गतासुयोधनिश्चेष्टशरीरशतवाहिनीम् ।
महाप्रतिभयां रौद्रां घोरां वैतरणीमिव ।
नदीं प्रवर्तयामास भीरूणां भयवर्धिनीम् ।
तं दृष्ट्वा तस्य विक्रान्तमन्तकस्येव रूपिणः ।
अभूतपूर्वं कुरुषु भयमागाद्रणाजिरे ।
तत आदाय वीराणामस्त्रैरस्त्राणि पाण्डवः ।
आत्मानं रौद्रमाचष्ट रौद्रकर्मणि निष्ठितः ।
ततो रथवरान्राजन्नभ्यतिक्रामदर्जुनः ।

## 16

K4 B Dc1 Dn D2, 3 ins. after 7. 121. 15 : D1 after 14$^{ab}$ : D5 after 16$^{cd}$ :

एष मध्ये कृतः षड्भिः पार्थ वीरैर्महारथैः ।
जीवितेप्सुर्महाबाहो भीतस्तिष्ठति सैन्धवः ।
एताननिर्जित्य रणे षड्रथान्पुरुषर्षभ ।
न शक्यः सैन्धवो हन्तुं ततो निर्व्याजमर्जुन ।
योगमत्र विधास्यामि सूर्यस्यावरणं प्रति ।
अस्तं गत इति व्यक्तं द्रक्ष्यत्येकः स सिन्धुराट् ।
हर्षेण जीविताकाङ्क्षी विनाशार्थं तव प्रभो ।
न गोप्स्यति दुराचारः स आत्मानं कथंचन ।
तत्र छिद्रे प्रहर्तव्यं त्वयास्य कुरुसत्तम ।
व्यपेक्षा नैव कर्तव्या गतोऽस्तमिति भास्करः ।
एवमस्त्विति बीभत्सुः केशवं प्रत्यभाषत ।

र- ). — ( L. 42 ) B2, 3 Dc1 Dn1 -निष्कीर्णान्त्रैः ( for निकृत्तान्त्रैः ). D3 कृत्तमूर्द्धभिः ( for °संधिभिः ). — ( L. 43 ) B2, 5 शतशोथ ( for कूजद्भिश्च ). — ( L. 44 ) D3 मृत्यो-रात्क्रीडननिभं ( for the prior half ). — B5 om. line 45. — ( L. 47 ) B1, 5 खुर- ( for क्षुर- ). — ( L. 48 ) Dn1 सृक्किणीव ( for स्रग्वि° ). — ( L. 52 ) B4 transp. भृशं and मही. — After line 53, D3 reads line 61. — ( L. 54 ) Dn1 चर्मास्थिभिर् ( for मर्मा° ). Dc1 Dn1 -शाड्वलां ( for -शाद्वलाम् ). — ( L. 55 ) Dc1 Dn1 रुक्म- ( for रुग्ण- ). Dn1 -संकुलां ( for -संकटाम् ). — ( L. 56 ) Dn1 छिन्न- ( for छत्र- ). — ( L. 59 ) B -युगेशाक्ष- ( for °षाक्ष- ). — ( L. 60 ) B1-4 D3 -शात- ( for -शक्ति- ). — ( L. 61 ) Dn1 बलाहक- ( for बलकङ्क- ). B -मकरोत्करां ; D3 °ल्वनां ( for °त्कटाम् ). — ( L. 63 ) Dn1 भूताकीर्णां ( for भूतैः कीर्णां ). — ( L. 67 ) Dc1 तद् ( for तं ). — ( L. 69 ) B5 विनिवार्य शरीराणाम् ( for the prior half ). B5 अंत्रैर् ( sic ) ( for अस्त्रैर् ). — ( L. 70 ) Bom. ed. [अ]धिष्ठितः ( for नि° ). — ( L. 71 ) B ( except B2 ) अत्यतिक्रामद् ( for अभ्यति° ).

16

D5 om. lines 1–2. — ( L. 3 ) B5 D3 पुरुषर्षभान्. — ( L. 4 ) D5 शक्योथ ( for न शक्यः ). Dc1 यत्तो ( for ततो ). D5 अर्जुनं. K4 D1 यत्नवान्भव फाल्गुन ; Dn2 D2 यत्तो विन्याध चार्जुन ( for the post. half ). — ( L. 6 ) Dc1 इव ( for इति ). Dc1 Dn1 अर्कं ( for एकः ). — ( L. 7 ) B5 विनाशाय ; D1 विनाशार्थे ( for °शार्थं ). — ( L. 8 ) B5 स सार्थानां ; D5 स्वमा-त्मानं ( for स आ° ). — ( L. 9 ) B2 तु ; D2 स ; D5 [अ]सौ ( for [अ]स्य ). — D5 om. lines 16–85. — ( L. 16 ) D2 तव ( for रविम् ). — ( L. 17 ) B4 तथा ( for तदा ). B5 तन्नास्यस्त्राणि ते* ( for the prior half ).

ततोऽसृजत्तमः कृष्णः सूर्यस्यावरणं प्रति ।
योगी योगेन संयुक्तो योगिनामीश्वरो हरिः ।
सृष्टे तमसि कृष्णेन गतोऽस्तमिति भास्करः ।
त्वदीया जहृषुर्योधाः पार्थनाशान्नराधिप ।
ते प्रहृष्टा रणे राजन्नापश्यन्सैनिका रविम् ।
उन्नाम्य वक्त्राणि तदा स च राजा जयद्रथः ।
वीक्षमाणे ततस्तस्मिन्सिन्धुराजे दिवाकरम् ।
पुनरेवाब्रवीत्कृष्णो धनंजयमिदं वचः ।
पश्य सिन्धुपतिं वीरं प्रेक्षमाणं दिवाकरम् ।
भयं विपुलमुत्सृज्य त्वत्तो भरतसत्तम ।
अयं कालो महाबाहो वधायास्य दुरात्मनः ।
छिन्धि मूर्धानमस्याशु कुरु साफल्यमात्मनः ।
इत्येवं केशवेनोक्तः पाण्डुपुत्रः प्रतापवान् ।
न्यवधीत्तावकं सैन्यं शरैरर्काग्निसंनिभैः ।
कृपं विव्याध विंशत्या कर्णं पञ्चाशता शरैः ।
शल्यं दुर्योधनं चैव षड्भिः षड्भिरताडयत् ।
वृषसेनं तथाष्टाभिः षष्ट्या सैन्धवमेव च ।
तथैवान्यान्महाबाहुस्त्वदीयान्पाण्डुनन्दनः ।
गाढं विद्ध्वा शरै राजञ्जयद्रथमुपाद्रवत् ।
तं समीपस्थितं दृष्ट्वा लेलिहानमिवानलम् ।
जयद्रथस्य गोप्तारः संशयं परमं गताः ।
ततः सर्वे महाराज तव योधा जयैषिणः ।
सिषिचुः शरधाराभिः पाकशासनिमाहवे ।
संछाद्यमानः कौन्तेयः शरजालैरनेकशः ।
अक्रुध्यत्स महाबाहुरजितः कुरुनन्दनः ।
ततः शरमयं जालं तुमुलं पाकशासनिः ।
व्यसृजत्पुरुषव्याघ्रस्तव सैन्यजिघांसया ।
ते हन्यमाना वीरेण योधा राजन्रणे तव ।
प्रजह्रुः सैन्धवं भीता द्वौ समं नाप्यधावताम् ।
तत्राद्भुतमपश्याम कुन्तीपुत्रस्य विक्रमम् ।
तादृङ्न भावी भूतो वा यच्चकार महायशाः ।
द्विपान्द्विपगतांश्चैव हयान्हयगतानपि ।
तथा स रथिनश्चैव न्यहन्रुद्रः पशूनिव ।
न तत्र समरे कश्चिन्मया दृष्टो नराधिप ।
गजो वाजी नरो वापि यो न पार्थशराहतः ।
रजसा तमसा चैव योधाः संछन्नचक्षुषः ।
कश्मलं प्राविशन्घोरं नान्वजानन्परस्परम् ।
ते शरैर्भिन्नमर्माणः सैनिकाः पार्थचोदितैः ।
बभ्रमुश्चस्खलुः पेतुः सेदुर्मम्लुश्च भारत ।
तस्मिन्महाभीषणके प्रजानामिव संक्षये ।
रणे महति दुष्पारे वर्तमाने सुदारुणे ।
शोणितस्य प्रसेकेन शीघ्रत्वादनिलस्य च ।
अशाम्यत्तद्रजो भौममसृक्सिक्ते धरातले ।
आनाभि निरमज्जंश्च रथचक्राणि शोणिते ।
मत्ता वेगवतो राजंस्तावकानां रणाङ्गणे ।
हस्तिनश्च हतारोहा दारिताङ्गाः सहस्रशः ।
स्वान्यनीकानि मृद्नन्त आर्तनादाः प्रदुद्रुवुः ।
हयाश्च पतितारोहाः पत्तयश्च नराधिप ।
प्रदुद्रुवुर्भयाद्राजन्धनंजयशराहताः ।
मुक्तकेशा विकवचाः क्षरन्तः क्षतजं क्षितौ ।

— B5 om. (hapl.) lines 19–20. — (L. 20) Dc1 Dn1 संख्ये (for वीरं). — (L. 21) K4 Dn2 D1.2 भयं हि (K4 भयेन) विप्रमुच्यैतत् (for the prior half). — (L. 26) D3 पंचशता. — (L. 27) Dn1 एतान् (for the second षड्भिर्). — K4 om. lines 28–30. — (L. 29) Dn2 D2 च; D1 [अ]स्मान् (for [अ]न्यान्). D1 सर्वान्वै (for त्वदीयान्). — B4 om. lines. 33–36. — (L. 37) Dn1 D2 तुमलं (for तुमुलं). — (L. 40) B5 समौ (for समं). K4 D1.2 नाभ्यधावतां (for नाप्य°). — (L. 44) Dc1 Dn1 D1 सारथिनश् (for स रथि°). K4 D1 जघ्ने (for न्यहन्). — (L. 45) Dn1 तत्र न (by transp.). — (L. 47) Dn1 D5 संछिन्न- (for संछन्न-). — (L. 48) K4 D1 अभ्यजानन्; B1.3 Dn1 D3 नाभ्यजा° (for नान्वजा°). B4 पराभवं (for परस्परम्). — (L. 49) Dn1 तैः (for ते). K4 D1 -नोदितैः; B5 D2.3 -चोदिताः (for -चोदितैः). — (L. 53) K4 अनलस्य (for अनि°). — (L. 54) D1 अशाम्यत (for अशाम्यत्तद्). D3 संसृक्तिने (for असृक्सिक्ते). D1 असृक्क्लिन्ने च धरातले (hypermetric) (for the post. half). — (L. 56) Dn1 तत्र (for मत्ता). B1 D2 वेगवतां; B2.3.5 Dn2 वेगवता (for °वतो). B रणांगने (for रणाङ्गणे). — (L. 57) B5 ते (for च). — B2 om. lines 61–64 — (L. 61) Dn2 D2 क्षतैः (for क्षितौ). — (L. 62) B1 अपलायंत; B4 Dn2 D3 प्रापला° (for प्रपला°).

प्रपलायन्त संत्रस्तास्त्यक्त्वा रणशिरो जनाः ।
ऊरुग्राहगृहीताश्च केचित्तत्राभवन्भुवि ।
हतानां चापरे मध्ये द्विरदानां निलिल्यिरे ।
एवं तव बलं राजन्द्रावयित्वा धनंजयः ।
न्यवधीत्सायकैर्घोरैः सिन्धुराजस्य रक्षिणः ।
कर्णं द्रौणिं कृपं शल्यं वृषसेनं सुयोधनम् ।
छादयामास तीव्रेण शरजालेन पाण्डवः ।
न गृह्णन्नक्षिपन्नाजन्नमुञ्चन्नापि संदधन् ।
अदृश्यतार्जुनः संख्ये शीघ्रास्त्रत्वात्कथंचन ।
धनुर्मण्डलमेवास्य दृश्यते स्मास्यतः सदा ।
सायकाश्च व्यदृश्यन्त निश्चरन्तः समन्ततः ।
कर्णस्य तु धनुश्छित्त्वा वृषसेनस्य चैव ह ।
शल्यस्य सूतं भल्लेन रथनीडादपातयत् ।
गाढविद्धावुभौ कृत्वा शरैः स्वस्त्रीयमातुलौ ।
अर्जुनो जयतां श्रेष्ठो द्रौणिशारद्वतौ रणे ।
एवं तान्व्याकुलीकृत्य त्वदीयानां महारथान् ।
उज्जहार शरं घोरं पाण्डवोऽनलसंनिभम् ।
इन्द्राशनिसमप्रख्यं दिव्यमस्त्राभिमन्त्रितम् ।
सर्वभारसहं शश्वद्गन्धमाल्यार्चितं महत् ।
वज्रेणास्त्रेण संयोज्य विधिवत्कुरुनन्दनः ।
समादधन्महाबाहुर्गाण्डिवे क्षिप्रमर्जुनः ।
तस्मिन्संधीयमाने तु शरे ज्वलनतेजसि ।
अन्तरिक्षे महानादो भूतानामभवन्नृप ।
अब्रवीच्च पुनस्तत्र त्वरमाणो जनार्दनः ।

17

B1–4 Dc1 ins. after 7. 123. 36 : B5 after 40 : Dn1 after 39$^{ab}$ : D5 after 41

अनुकर्षैरुपासङ्गैः पताकाभिर्ध्वजैस्तथा ।
उपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ।
चक्रैः प्रमथितैश्चित्रैरक्षैश्च बहुधा रणे ।
युगैर्योक्त्रैः कलापैश्च धनुर्भिः सायकैस्तथा ।
परिस्तोमैः कुथाभिश्च परिघैरङ्कुशैस्तथा ।
शक्तिभिर्भिन्दिपालैश्च तूणैः शूलैः परश्वधैः ।
प्रासैश्च तोमरैश्चैव कुन्तैर्यष्टिभिरेव च ।
शतघ्नीभिर्भुशुण्डीभिः खड्गैः परशुभिस्तथा ।
मुसलैर्मुद्गरैश्चैव गदाभिः कुणपैस्तथा ।
सुवर्णविकृताभिश्च कशाभिर्भरतर्षभ ।
घण्टाभिश्च गजेन्द्राणां भाण्डैश्च विविधैरपि ।
स्रग्भिश्च नानाभरणैर्वस्त्रैश्चैव महाधनैः ।
अपविद्धैर्बभौ भूमिर्ग्रहैर्द्यौरिव शारदी ।

— (L. 63) B3 [अ]पतन् (for [अ]भवन्). — (L. 65) B4 त्रासयित्वा (for द्राव°). — (L. 67) Bom. ed. द्रौणिं कृपं कर्णशल्यौ (for the prior half). — (L. 68) D3 विक्षिपन् (for पाण्डवः). — D3 om. lines 69–85. — (L. 69) B1–3. 5 संदधत् (for °धन्). B4 Dn2 मुंचन्नापि च संदधत्; Dn1 न मुंचन्नापि मादधत् (for the post. half). — After line 69, K4 D1 ins.:

दद्दशे रणभूमौ तु शरजालानि विक्षिपन् ।
ततस्तस्य नरेन्द्रस्य पुत्रमूर्धनि भूतले ।
जयद्रथवधे प्राप्ते लम्बमाने दिवाकरे ।
कौरवी पाण्डवी सेना बाला प्रौढा वधूरिव ।

[ (L. 1) D1 सर- (for शर-). — D1 om. lines 2–4. ]

— K4 D1 om. lines 70–85. — (L. 73) B1. 3 Dc1 च (for तु). D2 हि (for ह). — (L. 74) B1. 3 Dc1 Dn1 अपाहरत् (for °तयत्). — (L 77) B1. 4 Dc1 त्वदीयान्स (for त्वदीयानां). — (L. 78) B1. 2 (marg.). 3 Dc1 Dn1 उद्ववर्ह (for उज्जहार). — (L. 79) B1. 3 Dc1 Dn1 मंत्रानु-; B2. 4. 5 मंत्राभि- (for अस्त्राभि-). — B3 reads lines 82–85 on marg. — (L. 84) B1. 2. 5 अंतरीक्षे (for °रिक्षे). Dc1 चाभवन् (for अभवन्).

17

B3 reads lines 1–2 on marg. — (L. 1) D5 युगैः खड्गैः (for उपासङ्गैः). B4 अपि (for तथा). — (L. 3) B2 (marg.) दंडैश् (for अक्षैश्). — (L. 4) B5 om. from the post. half up to the prior half of line 6. B1 धनुर्भिः सायकोत्तमैः (for the post. half). — (L. 6) Dn1 D5 भिंडीपालैश् (for भिन्दि°). Dc1 हूलैः शूलैः परस्वधैः; D5 शूलैः प्रासैः परस्वधैः (for the post. half). — (L. 7) D5 हूलैश् (for प्रासैश्). — (L. 8) D5 भृशडीभिः (for भुशुं°). — (L. 9) B1. 3. 5 Dn1 मुष (Dn1 °श) लैर् (for मुस°). B2 कुनपैस्; B5 कर्शयैस् (sic) (for

पृथिव्यां पृथिवीहेतोः पृथिवीपतयो हताः ।
पृथिवीमुपगुह्याङ्गैः सुप्ताः कान्तामिव प्रियाम् ।
इमांश्च गिरिकूटाभान्नागानैरावतोपमान् ।
क्षरतः शोणितं भूरि शस्त्रच्छेददरीमुखैः ।
दरीमुखैरिव गिरीन्गैरिकाम्बुपरिस्रवान् ।
तव बाणहतान्वीर पश्य निष्टनतः क्षितौ ।
हयांश्च पतितान्पश्य स्वर्णभाण्डविभूषितान् ।
गन्धर्वनगराकारान्रथांश्च निहतेश्वरान् ।
छिन्नध्वजपताकाक्षान्विचक्रान्हतसारथीन् ।
निकृत्तकूबरयुगान्भग्नेषान्बन्धुरान्प्रभो ।
पश्य पार्थ हयान्भूमौ विमानोपमदर्शनान् ।
पत्तींश्च निहतान्वीर शतशोऽथ सहस्रशः ।
धनुर्भृतश्चर्मभृतः शयानान्रुधिरोक्षितान् ।
महीमालिङ्ग्य सर्वाङ्गैः पांसुध्वस्तशिरोरुहान् ।
पश्य योधान्महाबाहो त्वच्छरैर्भिन्नविग्रहान् ।
निपातितद्विपरथवाजिसंकुल-
मसृग्वसापिशितसमृद्धकर्दमम् ।
निशाचरश्ववृकपिशाचमोदनं
महीतलं नरवर पश्य दुर्दृशम् ।
इदं महत्त्वय्युपपद्यते विभो
रणाजिरे कर्म यशोभिवर्धनम् ।
शतक्रतौ चापि च देवसत्तमे
महाहवे जघ्नुषि दैत्यदानवान् ।
स दर्शयन्नेव किरीटिनेऽरिहा
जनार्दनस्तामरिभूमिमञ्जसा ।
अजातशत्रुं समुपेत्य पाण्डवं
निवेदयामास हतं जयद्रथम् ।

18

After 7. 124. 18, B $D_{c1}$ $D_{n1}$ ins.:

संहृष्टेन्द्रियचित्तात्मा नाशकद्वक्तुमोजसा ।
मुहूर्तमिव हर्षेण तूष्णीं भूत्वा महामतिः ।
ततो हर्षान्वितो राजा हर्षाश्रुप्लुतलोचनः ।
उवाच परमप्रीतः सगद्गदमिदं वचः ।
प्रियमेतदुपश्रुत्य त्वत्तः पुष्करलोचन ।
नान्तं गच्छामि हर्षस्य तितीर्षुरुदधेरिव ।
अत्यद्भुतमिदं कृष्ण कृतं पार्थेन धीमता ।
त्वया गुप्तेन गोविन्द घ्नता पापं जयद्रथम् ।
किं तु नात्यद्भुतं तेषां येषां नस्त्वं समाश्रयः ।
स्थितः सर्वात्मना नित्यं प्रियेषु च हितेषु च ।
त्वं चैवास्माभिराश्रित्य कृतः शस्त्रसमुद्यमः ।
सुरैरिवासुरवधे शक्रं शक्रानुजाहवे ।
असंभाव्यमिदं कर्म देवैरपि जनार्दन ।
त्वद्बुद्धिबलवीर्येण कृतवानेष फल्गुनः ।
बाल्यात्प्रभृति ते कृष्ण कर्माणि श्रुतवानहम् ।
अमानुषाणि दिव्यानि महान्ति च बहूनि च ।
यदैवानुगृहीताः स्म त्वया स्नेहानुरागतः ।
तदैवाज्ञासिषं शत्रून्हतान्प्राप्तां च मेदिनीम् ।
मार्कण्डेयः पुराणर्षिश्चरितज्ञस्तवानघ ।
माहात्म्यमनुभावं च पुरा कीर्तितवान्मुनिः ।
असितो देवलश्चैव नारदश्च महातपाः ।
पितामहश्च मे व्यासस्त्वामाहुर्विधिमुत्तमम् ।

कुणपैस्). — (L. 12) $D_{c1}$ $D_{n1}$ अस्त्रैश् (for स्रग्भिश्). $D_{c1}$ (before corr.) $D_{n1}$ यंत्रैश् (for वस्त्रैश्). — (L. 15) $D_{c1}$ उपगूह्य. — (L. 16) $D_{n1}$ द्रुमांश् (for इमांश्). — After line 16, $B_5$ reads line 25. — (L. 17) $D_5$ क्षरंतः (for क्षरतः). — (L. 19) $D_5$ तांश्च (for तव). — (L. 21) $D_5$ विहतेश्वरान् (for निहते°). — $D_{c1}$ om. lines 22–23. — (L. 23) $B_5$ निकृत्तकुबरांश्चैव (for the prior half). $B_4$ भग्नेशान्. — (L. 27) $D_{c1}$ आलंब्य (for आलिङ्ग्य). $D_{c1}$ $D_{n1}$ $D_5$ पांशु- (for पांसु-). — (L. 29) $D_5$ -द्विपरथाश्व- (for -द्विपरथवाजि-). — (L. 30) $D_5$ -कार्मुकं (for -कर्दमम्). — (L. 31) $D_{c1}$ -वृक- (for -श्ववृक-). — (L. 33) $B_4$ प्रभो (for विभो). — (L. 35) $B_3$ $D_{c1}$ $D_{n1}$ वापि (for चापि). — After line 36, $B_2$ reads 41.

18

(L. 9) $B_2$ च (for नस्). — (L. 11) $B_3$ -समुद्यतः (for °द्यमः). — (L. 14) $D_5$ त्वद्वीर्यबुद्धिबलेन (for the prior half). $B_3$ $D_{c1}$ एव (for एष). — (L. 15) $B_3$ $D_{c1}$ $D_{n1}$ transp. ते कृष्ण and कर्माणि. — After line 16, $B_4$ reads lines 21–27. $B_4$ om. line 17. $B_4$ om.

त्वं तेजस्त्वं परं ब्रह्म त्वं सत्यं त्वं महत्तपः ।
त्वं श्रेयस्त्वं यशश्चाग्र्यं कारणं जगतस्तथा ।
त्वया सृष्टमिदं सर्वं जगत्स्थावरजङ्गमम् ।
प्रलये समनुप्राप्ते त्वां वै निविशते पुनः ।
अनादिनिधनं देवं विश्वमीशं प्रजापतिम् ।
धातारमजमव्यक्तमाहुर्वेदविदो जनाः ।
भूतात्मानं महात्मानमनन्तं विश्वतोमुखम् ।
अपि देवा न जानन्ति गुह्यमाद्यं जगत्पतिम् ।
नारायणं परं देवं परमात्मानमीश्वरम् ।
ज्ञानयोनिं हरिं विष्णुं मुमुक्षूणां परायणम् ।
परं पुराणं पुरुषं पुराणानां परं च यत् ।
एवमादिगुणानां ते कर्मणां दिवि चेह च ।
अतीतभूतभव्यानां संख्यातात्र न विद्यते ।
सर्वतो रक्षणीयाः स्म सशक्राणां दिवौकसाम् ।
यैस्त्वं सर्वगुणोपेतः सुहृन्न उपपादितः ।
इत्येवं धर्मराजेन हरिरुक्तो महायशाः ।
अनुरूपमिदं वाक्यं प्रत्युवाच जनार्दनः ।
भवतस्तपसोग्रेण धर्मेण परमेण च ।
साधुत्वादार्जवाच्चैव हतः पापो जयद्रथः ।
अयं च पुरुषव्याघ्र त्वदनुध्यानबृंहितः ।
हत्वा योधसहस्राणि न्यहञ्जिष्णुर्जयद्रथम् ।
कृतित्वे बाहुवीर्ये च तथैवासंभ्रमेऽपि च ।
शीघ्रतामोघवेधित्वे नास्ति पार्थसमः क्वचित् ।
तदयं भरतश्रेष्ठ भ्राता ते पाण्डवार्जुनः ।
सैन्यक्षयं रणे कृत्वा सिन्धुराजशिरोऽहरत् ।
ततो धर्मसुतो जिष्णुं परिष्वज्य विशां पते ।
प्रमृज्य वदनं चास्य पर्याश्वासयत प्रभुः ।
अतीव सुमहत्कर्म कृतवानसि फल्गुन ।
असह्यं चाविषह्यं च देवैरपि सवासवैः ।
दिष्ट्या निस्तीर्णभारोऽसि हतारिश्चासि शत्रुहन् ।
दिष्ट्या सत्या प्रतिज्ञेयं कृता हत्वा जयद्रथम् ।
एवमुक्त्वा गुडाकेशं धर्मराजो महायशाः ।
पस्पर्श पुण्यगन्धेन पृष्ठे हस्तेन पार्थिवः ।

## 19

After 7.128.14, S ins.:

धृतराष्ट्र उवाच ।

तथा हतेषु सैन्येषु तथा कृच्छ्रगतः स्वयम् ।
कच्चिद्दुर्योधनः सूत नाकार्षीत्पृष्ठतो रणम् ।
एकस्य च बहूनां च संनिपातो महानभूत् ।
विशेषतो हि नृपतेर्विषमं प्रतिभाति मे ।
सोऽत्यन्तसुखसंवृद्धो रक्ष्यो लोकस्य चेश्वरः ।
एको बहून्समासाद्य कच्चिन्नासीत्पराङ्मुखः ।
द्रोणः कर्णः कृपश्चैव कृतवर्मा च सात्वतः ।
नावारयन्कथं युद्धे राजानं राजकाङ्क्षिणः ।
सर्वोपायैर्हि युद्धेषु रक्षितव्यो महीपतिः ।
एषा नीतिः परा युद्धे दृष्टा तत्र महर्षिभिः ।
प्रविष्टे वै मम सुते परेषां वै महद्बलम् ।

lines 19–20. — (L. 23) $B_{1.3}$ त्वं परं; $Dc_1$ परमं (for त्वं महत्). — (L. 25) $Dc_1$ $Dn_1$ त्वया सर्वमिदं सृष्टं (for the prior half). — (L. 26) $B_2$ हि (for वै). $Dn_1$ त्वं हि निवेशनं पुनः (for the post. half). — (L. 27) $B_3$ जगत्पतिं (for प्रजापतिम्). — $B_4$ om. lines 28–33. $Dn_1$ repeats line 28 after line 30. — (L. 28) $Dn_1$ (first time) त्वं धातारमजं व्यक्तम् (for the prior half). — (L. 30) $B_{1.3}$ $Dc_1$ त्वाद्यं (for आद्यं). — (L. 33) $B_3$ $Dc_1$ $Dn_1$ परं पराणां ($Dc_1$ पुराणां; $Dn_1$ पुराणं) परमं (for the prior half). — (L. 35) $B_4$ -भव्यं च (for -भव्यानां). $B_{1.5}$ संख्या तात; $B_4$ संख्या तावन् (for संख्यातात्र). — (L. 36) $Dn_1$ दिवौकसः. Bom. ed. शक्रेणेव दिवौकसः (for the post. half). — Before line 38, $B_4$ ins. संजय उवाच. $B_5$ om. lines 38–42. — (L. 38) $B_3$ महौजसा (for महायशाः). — (L. 40) $B_3$ $Dn_1$ भवता (for °तस्). $Dn_1$ वः (for च). — (L. 41) $B_3$ आर्जवत्वाच्च; $Dc_1$ $Dn_1$ अर्जुनाच्चैव (for आर्जवा°). — (L. 42) $B_1$ -संवृतः (for -बृंहितः). — (L. 45) $B_3$ -वेदित्वे; $B_5$ -बुद्धित्वे (for -वेधित्वे). — (L. 46) $B_5$ तेद्य यद् (for पाण्डव). — (L. 49) $B_4$ $Dn_1$ तस्य (for चास्य). — (L. 51) $B_{1.2}$ अशक्यं (for असह्यं). — (L. 53) $B_1$ हत्वा पापं जयद्रथं (for the post. half). — (L. 54) $B_2$ (marg.) युधिष्ठिरः (for महायशाः).

19

(L. 1) $G_1$ $M_{1-4.5}$ (*sup. lin.* as above) गतेषु (for हतेषु). T $G_{2-4}$ -गतेषु च (for -गतः स्वयम्). — (L. 4) $M_1$ नृपतिभिर्; $M_{4.5}$ [ऽ]पि नृपतेर् (for हि नृ°).

मामका रथिनां श्रेष्ठाः किमकुर्वत संजय ।
संजय उवाच ।
राजन्संग्राममाश्चर्यं पुत्रस्य तव भारत ।
एकस्य च बहूनां च शृणु मे ब्रुवतोऽद्भुतम् ।
द्रोणेन वार्यमाणोऽसौ कर्णेन च कृपेण च ।
प्राविशत्पाण्डवीं सेनां मकरः सागरं यथा ।
किरन्निषुसहस्राणि तत्र तत्र तदा तदा ।
पाञ्चालान्पाण्डवांश्चैव विव्याध निशितैः शरैः ।
यथोद्यम्य ततः सूर्यो रश्मिभिर्नाशयेत्तमः ।
तथा पुत्रस्तव बलं नाशयत्तन्महाबलः ।

## 20

After 7. 131. $24^{ab}$, $K_4$ B $Dc_1$ Dn $D_{1.5}$ ins. :

अभ्यधावत्ततो द्रोणो यदुवीरजिघांसया ।
तमायान्तमभिप्रेक्ष्य युधिष्ठिरपुरोगमाः ।
परिवव्रुर्महात्मानं परीप्सन्तो यदूद्वहम् ।
ततः प्रववृते युद्धं द्रोणस्य सह पाण्डवैः ।
बलेरिव सुरैः पूर्वं त्रैलोक्यजयकाङ्क्षया ।
ततः सायकजालेन पाण्डवानीकमावृणोत् ।
भारद्वाजो महातेजा विव्याध च युधिष्ठिरम् ।
सात्यकिं दशभिर्बाणैर्विंशत्या पार्षतं शरैः ।
भीमसेनं च नवभिर्नकुलं पञ्चभिस्तथा ।
सहदेवं तथाष्टाभिः शतेन च शिखण्डिनम् ।
द्रौपदेयान्महाबाहुः पञ्चभिः पञ्चभिः शरैः ।
विराटं मत्स्यमष्टाभिर्द्रुपदं दशभिः शरैः ।
युधामन्युं त्रिभिः षड्भिरुत्तमौजसमाहवे ।
अन्यांश्च सैनिकान्विद्ध्वा युधिष्ठिरमुपाद्रवत् ।
ते वध्यमाना द्रोणेन पाण्डुपुत्रस्य सैनिकाः ।
प्राद्रवन्वै भयाद्राजन्सार्तनादा दिशो दश ।
काल्यमानं तु तत्सैन्यं दृष्ट्वा द्रोणेन फल्गुनः ।
किंचिदागतसंरम्भो गुरुं पार्थोऽभ्ययाद्द्रुतम् ।
दृष्ट्वा द्रोणस्तु बीभत्सुमभिधावन्तमाहवे ।
संन्यवर्तत तत्सैन्यं पुनर्यौधिष्ठिरं नृप ।
ततो युद्धमभूद्भूयो भारद्वाजस्य पाण्डवैः ।
द्रोणस्तव सुतै राजन्सर्वतः परिवारितः ।
व्यधमत्पाण्डुसैन्यानि तूलराशिमिवानलः ।
तं ज्वलन्तमिवादित्यं दीप्तानलसमद्युतिम् ।
राजन्ननिशमत्यन्तं दृष्ट्वा द्रोणं शरार्चिषम् ।
मण्डलीकृतधन्वानं तपन्तमिव भास्करम् ।
दहन्तमहितान्सैन्ये नैनं कश्चिदवारयत् ।
यो यो हि प्रमुखे तस्य तस्थौ द्रोणस्य पूरुषः ।
तस्य तस्य शिरश्छित्त्वा ययौ द्रोणशरः क्षितिम् ।
एवं सा पाण्डवी सेना वध्यमाना महात्मना ।
प्रदुद्राव पुनर्भीता पश्यतः सव्यसाचिनः ।

— $G_1$ $M_{1.3-5}$ om. lines 8–10. — (L. 10) $G_2$ पुरा (for परा). $G_5$ मनीषिभिः (for महर्षिभिः). — (L. 11) T $G_2$ वा (for वै). $G_1$ $M_{1-3.5}$ सु- (for वै). — (L. 12) MSS. अकुर्वत. — (L. 13) $G_1$ M तव पुत्रस्य भारत (for the post. half). — (L. 14) $G_1$ $M_{1-3.5}$ वदतो (for ब्रुवतो). — (L. 15) $M_4$ च (for ऽसौ). $G_1$ $M_{1-3.5}$ वार्यमाणस्तु द्रोणेन (for the prior half). $G_2$ कृपणैन (for च कृपेण). — (L. 17) $G_{3.4}$ तथा तथा. — (L. 18) T $G_2$ $M_{1.2.5}$ विव्याथ (for °ध). — (L. 19) $G_{3.4}$ गतः (for ततः). $G_1$ M यथोद्यन्वि( $M_4$ °द्वि)ततं सूर्यो (for the prior half). $G_3$ रथिभिर् (for रश्मि°). $M_{1.2}$ ततः (for तमः). — (L. 20) $M_1$ यथा (for तथा). $G_1$ $M_{1.2.4.5}$ महारथः (for °बलः).

20

(L. 1) $B_4$ अभ्यद्रवत् (for अभ्यधावत्). — (L. 3) $B_1$ यदूत्तमं (for °द्वहम्). — (L. 5) $Dn_1$ त्रैलोक्यस्याभिकांक्षया (for the post. half). — (L. 7) $B_1$ महाराज (for °तेजा). — (L. 12) $D_5$ निशितैः (for दशभिः). — (L. 17) $D_1$ फाल्गुनिः; Some MSS. फाल्गुनः (for फल्गुनः). — (L. 18) $D_5$ -संतप्तो (for -संरम्भो). — (L. 19) $K_4$ om. from the prior half up to the prior half of line 21. $Dc_1$ $Dn_1$ $D_5$ द्रोणं (for द्रोणस्). — (L. 20) $D_{1.5}$ स (for सं-). Bom. ed. बलं (for नृप). — (L. 21) $B_1$ तयोर् (for ततो). — (L. 23) $B_2$ (marg. as above) तृण- (for तूल-). — (L. 24) $B_1$ $Dc_1$ [अ]त्युग्रं (for [आ]दित्यं). — (L. 25) $B_1$ $Dc_1$ $D_5$ असंतं (for अत्यन्तं). $Dn_2$ द्रोण- (for द्रोणं). $Dn_1$ शरान्वितं (for शरार्चिषम्). — (L. 26) $B_{1.2}$ $Dc_1$ $Dn_1$ मंडलीभूत- (for °कृत-). — (L. 27) $B_1$ संस्थे (for सैन्ये). $Dn_1$ दहंतमिव तत्सैन्यं (for the prior half). $B_1$ नैकं (for नैनं). — (L. 29) $B_4$ ययुर्. $K_4$ $B_8$ ययु-

संप्रभग्नं बलं दृष्ट्वा द्रोणेन निशि भारत ।
गोविन्दमब्रवीज्जिष्णुर्गच्छ द्रोणरथं प्रति ।
ततो रजतगोक्षीरकुन्देन्दुसदृशप्रभान् ।
चोदयामास दाशार्हो हयान्द्रोणरथं प्रति ।
भीमसेनोऽपि तं दृष्ट्वा यान्तं द्रोणाय फल्गुनम् ।
स्वसारथिमुवाचेदं द्रोणानीकाय मां वह ।
सोऽपि तस्य वचः श्रुत्वा विशोको वाहयद्धयान् ।
पृष्ठतः सत्यसन्धस्य जिष्णोर्भरतसत्तम ।
तौ दृष्ट्वा भ्रातरौ यत्तौ द्रोणानीकमभिद्रुतौ ।
पाञ्चालाः सृञ्जया मत्स्याश्चेदिकारूषकोसलाः ।
अन्वगच्छन्महाराज केकयाश्च महारथाः ।
ततो राजन्नभूद्घोरः संग्रामो लोमहर्षणः ।
बीभत्सुर्दक्षिणं पार्श्वमुत्तरं च वृकोदरः ।
महद्भ्यां रथवृन्दाभ्यां बलं जगृहतुस्तव ।
तौ दृष्ट्वा पुरुषव्याघ्रौ भीमसेनधनंजयौ ।
धृष्टद्युम्नोऽभ्ययाद्राजन्सात्यकिश्च महाबलः ।
चण्डवाताभिपन्नानामुदधीनामिव स्वनः ।
आसीद्राजन्बलौघानां तदान्योन्यमभिघ्नताम् ।
सौमदत्तिवधात्क्रुद्धो दृष्ट्वा सात्यकिमाहवे ।

## 21

After 7.170.22$^{ab}$, G1 M1.2 ins.:

प्रपेतुः कुञ्जरास्तत्र शस्त्रसंघैर्निपातिताः ।
व्यदीर्यमाणा गिरयो वज्रनुन्ना यथा पुरा ।
हस्तिहस्तैश्च संछिन्नैर्गात्रैश्चैव विशां पते ।
अपरैश्च तथा बाणैः कुन्तैश्च कनकोज्ज्वलैः ।
संकीर्णा पृथिवी जज्ञे मांसशोणितकर्दमा ।
गजेभ्यश्च्यवमानानां यन्तॄणां तत्र भारत ।
विभुजानां विशीर्णानां न्यस्तकार्मुकवर्मणाम् ।
पूर्णमायोधनं जज्ञे प्रेतराजपुरोपमम् ।
अङ्कुशैरपविद्धैश्च तोमरैश्च महाधनैः ।
अलंकारैश्च नागानां ग्रैवेयैश्च सकङ्कटैः ।
कक्ष्याभिरग्निकुण्डैश्च यन्त्रैश्चैव पताकिभिः ।
शक्तिभिश्च महाराज बाणैश्च नतपर्वभिः ।
रथिनां च रथैर्भग्नैश्छिन्नैर्वा युगदण्डकैः ।
चक्रैर्विमथितैर्भग्नैर्युगैरक्षैश्च भूषिता ।
तूणीरैरपविद्धैश्च चापैश्च सुमहाधनैः ।
अनुकर्षैः पताकाभिर्योक्त्रैश्चैव विशां पते ।
रश्मिभिश्च प्रतोदैश्च किङ्किणीभिश्च मारिष ।
कवचैश्च तथा दीप्तैश्चामरव्यजनैरपि ।
छत्रैश्च चन्द्रसंकाशैर्वृष्ट्यातपनिवारिभिः ।
अङ्गुलित्रैः सकेयूरैर्दीप्तैर्निष्कैश्च काञ्चनैः ।
कर्णसूत्रैः किरीटैश्च मुकुटैश्च महाधनैः ।
चित्रैर्वस्त्रैरलंकारैः कुण्डलैश्चापि भारत ।
अपविद्धैस्तथा शीर्षैर्बाहुभिश्च महात्मनाम् ।
संछन्ना पृथिवी रेजे तत्र तत्र यथातथम् ।
उरश्छदैस्तथा चित्रैर्घण्टाजालैश्च भास्वरैः ।
निहतैस्तुरगैश्चैव निर्जिह्वैः शोणितोक्षितैः ।
हयारोहपरैश्चैव निर्दग्धैरस्त्रतेजसा ।
नानाङ्गावयवैर्हीना योधाः सस्रुर्भयार्दिताः ।
चुक्रुशुस्तात तातेति हा हा पुत्रेति चासकृत् ।
योधा नूनं ते निधनं प्राप्ताः पाण्डवेया महारथाः ।
वासुदेवश्च वार्ष्णेयस्तथा सोमकसृञ्जयाः ।
जीवत्सु समरे तेषु न हि वीरेषु सैनिकाः ।
इमामवस्थां सहसा गच्छेयुर्वै कथंचन ।
इत्यब्रुवंस्तथा योधा हन्यमानास्तदा रणे ।
क्रुद्धेन द्रोणपुत्रेण कालेनेव युगक्षये ।
हन्यमानास्तथास्त्रेण तेन नारायणेन ते ।

द्रोणशराः क्षितिं (for the post. half). —(L. 31) B1.3.5 Dc1 Dn1 दुद्राव वै (B5 च) (for प्रदुद्राव). —(L. 34) D6 -संकाश- (for -गोक्षीर-). D5 -क्षीरकुंदेंदुसप्रभान् (for the post. half). —(L. 36) Some MSS. फाल्गुनं. —(L. 37) B1.2 स्वं; D5 स (for स्व-). —(L. 40) Dn1 यांतौ (for यत्तौ). —(L. 41) Dn1 पंचालाः. B1-3.5 -कोषलाः; Bom. ed. -कोसलाः. —(L. 42) Dn2 D5 कैकयाश्च (for केक°). —(L. 45) K4 तदा (for तव). —(L. 46) K4 पुरुषव्याघ्रं (for °व्याघ्रौ). —(L. 47) Dc1 Dn1 महारथः (for महाबलः). —Lines 48–49 = (var.) 7.131.20. —(L. 50) Dn1 सोमदत्ति- (for सौमदत्ति-).

21

(L. 2) G1 यथापुरं. —(L. 24) G1 संछिन्ना (for संछन्ना). —(L. 30) Prior half hypermetric.

## 22

After 7. 171. $36^{ab}$, $D_6$ ins. :

तमात्मभुजवेगेन विकर्षन्तं शरासनम् ।
तं तु दृष्ट्वा सुसंक्रुद्धं कालानलयमोपमम् ।
विमुञ्चन्विशिखांस्तूर्णं पार्षतोऽभ्यद्रवद्रणे ।
तौ द्रौणिः क्रोधताम्राक्षो दिधिक्षन्निव तेजसा ।
छादयामास बाणौघैर्धृष्टद्युम्नं समन्ततः ।
धृष्टद्युम्नोऽपि संभ्रान्तः शरेणानतपर्वणा ।
प्रत्यविध्यत संक्रुद्धः पार्षतं प्रयतो बलात् ।
तस्य द्रौणिर्धनुश्छित्त्वा स्थूणेन परवीरहा ।
धृष्टद्युम्नं त्रिसप्तत्या विव्याध निशितैर्नदन् ।
तदपास्य धनुश्छिन्नं धृष्टद्युम्नः प्रतापवान् ।
अन्यत्कार्मुकमादाय सोऽश्वत्थामानमार्दयत् ।
स तदप्यस्य संक्रुद्धश्चिच्छेद परमास्त्रवित् ।
तं चाप्यवाकिरद्बाणैर्धृष्टद्युम्नं परंतपः ।
ततः स पार्षतस्तूर्णं शक्तिं हेमपरिष्कृताम् ।
चिक्षेप परमक्रुद्धो ज्वलन्तीमशनीमिव ।
तामापतन्तीं सहसा व्यालीकाल इवाहवे ।
चिच्छेद सप्तधा राजञ्शरैः परमतेजनैः ।
तां निकृत्तां ततो दृष्ट्वा द्रौणिना पार्षतस्ततः ।
धनुरन्यत्समादाय समरे वेगवत्तरम् ।
ततोऽविध्यत्सुतीक्ष्णाभ्यां शराभ्यां द्रौणिमाहवे ।
ततो द्वाभ्यां सुतीक्ष्णाभ्यां भल्लाभ्यां तत्र कार्मुकम् ।
द्रौणिर्द्रुपदपुत्रस्य चिच्छेद प्रहसन्निव ।
तं च बाणैर्महातेजाः पुनरन्यैः समावृणोत् ।
साश्वसूतरथं तूर्णं छादयामास संयुगे ।
तस्य चानुचरान्सर्वान्दीप्तास्त्रान्पार्श्वतः स्थितान् ।
व्यद्रावयत संक्रुद्धः शरैः संनतपर्वभिः ।
ब्रह्मदत्तं ततो बाणं धृष्टद्युम्नजिघांसया ।
द्रोणपुत्रः प्रचिक्षेप सात्यकिस्तद्द्विधाच्छिनत् ।
सात्यकिस्तु तमादाय राजपुत्रं शरार्दितम् ।
अष्टाभिर्निशितैर्बाणैरश्वत्थामानमार्दयत् ।
अशीत्या पुनराहत्य नानारूपैरमर्षणः ।
विव्याधास्य त्रिभिः सूतं चतुर्भिश्चतुरो हयान् ।
एवमुक्त्वा शरैस्तीक्ष्णैः सात्यकिं तूर्णमावृणोत् ।
संरब्धः क्रोधताम्राक्षो द्रोणपुत्रः प्रतापवान् ।
सात्यकिस्तु ततः क्रुद्धः शरेणानतपर्वणा ।
द्रोणपुत्रं समाजघ्ने सर्वसैन्यस्य पश्यतः ।
ततो द्रौणिर्महाराज बाणैः संछाद्य सात्यकिम् ।
धनुः क्रोधपरीतात्मा चिच्छेदाशु महास्त्रवित् ।
ततः शक्तिं महाघोरां हेमदण्डामयस्मयीम् ।
चिक्षेप सात्यकिस्तूर्णं द्रोणपुत्रजिघांसया ।
तामापतन्तीं सहसा शक्रमुक्तामिवाशनिम् ।
अप्राप्तामेव चिच्छेद द्रौणिः सप्तभिराशुगैः ।
तां निकृत्तां शरैर्दृष्ट्वा द्रौणिना सायकैर्भृशम् ।
सोऽन्यत्कार्मुकमादाय भारघ्नं वेगवत्तरम् ।
तद्विकृष्य महच्चापं सात्यकिः सात्वतां वरः ।
सायकैर्बहुभिस्तूर्णमश्वत्थामानमार्दयत् ।
ततो द्रौणिः सुसंरब्धः शरजालेन माधवम् ।
छादयामास समरे सात्यकिं क्रोधमूर्छितः ।
तान्यस्य शरजालानि अन्तरिक्षे विशां पते ।
अप्राप्तानेव चिच्छेद युयुधानो महारथः ।
ततः पूर्णायतोत्सृष्टैर्हेमपुङ्खैः शिलाशितैः ।
बाणैर्विव्याध सुदृढं द्रोणपुत्रममर्षितः ।
तथा स विद्धः सुभृशं द्रोणपुत्रोऽत्यमर्षणः ।
शैनेयं समरे क्रुद्धः प्रदहन्निव चक्षुषा ।
अवाकिरदमेयात्मा बाणवर्षैः समन्ततः ।
पर्वतं वारिधाराभिस्तपान्ते जलदो यथा ।

## 23

After 7. 171. 46, $K_4$ $Dn_2$ $D_{1.5}$ T ins.

धनुर्ध्वजं च संयत्तैश्चिच्छेद कृतहस्तवत् ।
स साश्वं व्यधमच्चापि रथं हेमपरिष्कृतम् ।

22

Lines 31–32 = (var.) 7. 171. 46. — After line 32, $D_6$ reads 7. 171. 47–48.

23

(L. 1) $K_4$ T संयत्तश् (for °त्तैश्). — (L. 2) $K_4$ $D_1$ तिलशो; $D_5$ स शंखं (for स साश्वं). $K_4$ $D_1$ -परि-

हृदि विव्याध समरे त्रिंशता सायकैर्भृशम् ।
एवं स पीडितो राजन्नश्वत्थामा महाबलः ।
शरजालैः परिवृतः कर्तव्यं नान्वपद्यत ।
एवं गते गुरोः पुत्रे तव पुत्रो महारथः ।
कृपकर्णादिभिः सार्धं शरैः सात्वतमावृणोत् ।
दुर्योधनस्तु विंशत्या कृपः शारद्वतस्त्रिभिः ।
कृतवर्माथ दशभिः कर्णः पञ्चाशता शरैः ।
दुःशासनः शतेनैव वृषसेनश्च सप्तभिः ।
सात्यकिं विव्यधुस्तूर्णं समन्तान्निशितैः शरैः ।
ततः स सात्यकी राजन्सर्वानेव महारथान् ।
विरथान्विमुखांश्चैव क्षणेनैवाकरोन्नृप ।
अश्वत्थामा तु संप्राप्य चेतनां भरतर्षभ ।
चिन्तयामास दुःखार्तो निःश्वसंश्च पुनः पुनः ।
ततो रथान्तरं द्रौणिः समारुह्य परंतपः ।
सात्यकिं वारयामास किरञ्शरशतान्बहून् ।
तमापतन्तं संप्रेक्ष्य भारद्वाजसुतं रणे ।
विरथं विमुखं चैव पुनश्चक्रे महारथः ।
ततस्ते पाण्डवा राजन्दृष्ट्वा सात्यकिविक्रमम् ।
शङ्खशब्दान्भृशं चक्रुः सिंहनादांश्च नेदिरे ।
एवं तं विरथं कृत्वा सात्यकिः सत्यविक्रमः ।
जघान वृषसेनस्य त्रिसाहस्रान्महारथान् ।
अयुतं दन्तिनां सार्धं कृपस्य निजघान सः ।
पञ्चायुतानि चाश्वानां शकुनेर्निजघान ह ।
ततो द्रौणिर्महाराज रथमारुह्य वीर्यवान् ।
सात्यकिं प्रति संक्रुद्धः प्रययौ तद्वधेप्सया ।
पुनस्तमागतं दृष्ट्वा शैनेयो निशितैः शरैः ।
अदारयत्क्रूरतरैः पुनः पुनररिंदम ।

## 24

After 7.171.65, K4 B Dc1 Dn D1.5.6 T1 ins.:

मालवं पौरवं चैव युवराजं च चेदिपम् ।
दृष्ट्वा समक्षं निहतं द्रोणपुत्रेण पाण्डवः ।
भीमसेनो महाबाहुः क्रोधमाहारयत्परम् ।
ततः शरशतैस्तीक्ष्णैः संक्रुद्धाशीविषोपमैः ।
छादयामास समरे द्रोणपुत्रं परंतपः ।
ततो द्रौणिर्महातेजाः शरवर्षं निहत्य तम् ।
विव्याध निशितैर्बाणैर्भीमसेनममर्षणः ।
ततो भीमो महाबाहुर्द्रौणेर्युधि महाबलः ।
क्षुरप्रेण धनुश्छित्त्वा द्रौणिं विव्याध पत्रिणा ।
तदपास्य धनुश्छिन्नं द्रोणपुत्रो महामनाः ।
अन्यत्कार्मुकमादाय भीमं विव्याध पत्रिभिः ।
तौ द्रौणिभीमौ समरे पराक्रान्तौ महाबलौ ।
अवर्षतां शरवर्षं वृष्टिमन्ताविवाम्बुदौ ।
भीमनामाङ्किता बाणाः स्वर्णपुङ्खाः शिलाशिताः ।
द्रौणिं संछादयामासुर्घनौघा इव भास्करम् ।
तथैव द्रौणिनिर्मुक्तैर्भीमः संनतपर्वभिः ।
अवाकीर्यत स क्षिप्रं शरैः शतसहस्रशः ।
स छाद्यमानः समरे द्रौणिना रणशालिना ।

स्कृतं. — (L. 3) T विव्याथ (for °ध). D1.5 त्रिंशतैः. — (L. 7) D1 शल्य- (for कृप-). — T2 om. lines 6–29. — (L. 16) Bom. ed. अथो (for ततो). K4 D5 रथांतरे. — (L. 21) T1 चक्रिरे (for नेदिरे). — (L. 27) D1 वधेच्छया (for °प्सया). — (L. 29) D1 क्रूरनखैः (for °तरैः).

24

(L. 1) D1 om. from. मालवं up to युवराजं (in line 1). D6 मालव्यं (for °वं). — (L. 2) B1 Dc1 Dn1 D6 निहतान्. — (L. 4) D1 स क्रुद्धोथ; D6 भुजगाभैर् (for संक्रुद्धाशी-). — (L. 5) D1.6 परंतप. — (L. 6) B1.3 Dc1 Dn1 D6 तत् (for तम्). D1 ततो द्रौणिं च विव्याध पत्रिणा धनुराच्छिनत्. — K4 om. (? hapl.) lines 7–11. D1 om. lines 7–9. — (L. 7) Dn2 D2 om. (hapl.) from निशितैर् up to विव्याध (in line 9). — (L. 9) B5 पत्रिभिः. — D6 om. (hapl.) lines 10–11. — (L. 12) D6 ततो द्रौणिर्भीमसेनः (for the prior half). D6 महारथौ (for °बलौ). — (L. 13) Dn2 अवर्षेतां. B1 (marg.) शराशरं; D1.5 शरवर्षैर् (for °र्षं). D6 शरवर्षाण्यवर्षेतां प्रावृषीव बलाहकौ. — (L. 15) Dn2 संछादयामास. Dn2 D6 T1 मेघौघा (for घनौघा). — (L. 16) D6 तथैव द्रौणिना मुक्ता भीमं संनतपर्वणः. — (L. 17) B4 अवकीर्यंत. D6 अवाकिरन्रणे तूर्णं (for the prior half). — (L. 18) Dn2 D1.6 सं- (for स). B4 बल- (for रण-). B1 Dc1 Dn1 -मालिना; B2.3 -मानिना; D5 -शोभिना (for -शालिना). D6 द्रौणिना पांडवर्षभः (for the post. half). — (L. 20) B4 स्वर्णपुंखैर्

